


कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयस्य
प्रकाशनम्

# संस्कृतवाग्विलासः

## प्रथममुद्रा

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः
रामटेकम्

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयस्य
प्रकाशनम्

# संस्कृतवाग्विलासः

## प्रथममुद्रा

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः
रामटेकम् (नागपुरम्), महाराष्ट्रम्

# संस्कृतवाग्विलासः

प्रथममुद्रा

प्रेरणा तथा मार्गदर्शनम्

डॉ. उमा वैद्य

(मा. कुलगुरुः)

प्रधानसम्पादकः

डॉ. मधुसूदनः पेन्ना

सम्पादकमण्डलम्

डॉ. नन्दा पुरी

डॉ. सी.जी. विजयकुमारः

डॉ. ललिता चंद्रात्रे

डॉ. कृष्णकुमारः पाण्डेयः

डॉ. लीना रस्तोगी

लेखकमण्डलम्

डॉ.नन्दा पुरी

प्रा.परागः जोशी

डॉ.राजेन्द्रः जैनः

ISBN No. : 978-81-921617-5-4

कागदम् - ७० जीएसएम्, मॉपलिथो

प्रकाशनवर्षम् - २०१३



प्रकाशकः

कुलसचिवः

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः,रामटेकम्

# प्रतिज्ञा

भारतः मम देशः । सर्वे भारतीयाः मम बान्धवाः । भारतदेशे अहं सर्वदा स्निह्यामि । अस्य देशस्य याः समृद्धाः विविधाश्च परम्पराः ताः प्रति मम शिरः अभिमानेन उन्नतं भवति । तासां परम्पराणाम् अनुगमनं कर्तुम् आसादयितुं च अहं सदा प्रयतिष्ये ।

अहं पितरौ गुरून् वयोज्येष्ठान् प्रति च आदरेण वर्तेय । सर्वान् प्रति सौजन्येन व्यवहरेयम् । अहं मम राष्ट्रेण देशबान्धवैश्च सह एकान्तनिष्ठम् आचरणं करोमि इति प्रतिजाने । तेषां कल्याणे समुत्कर्षे च मम आत्यन्तिकं सौख्यं विनिहितम् अस्ति ।

जयतु संस्कृतम् । जयतु भारतम् ।

## शुभाशंसनम्

संस्कृतस्य अध्ययनं कर्तुं येषां महती इच्छा वर्तते तेषां कृते लघुस्वरूपाणि पुस्तकानि बहूनि उपलभ्यन्ते। परन्तु संस्कृतस्य वाङ्मयविकासे क्रमः दृश्यते तदनुसारं पुस्तकस्य निर्माणेन छात्राणां महान् उपकारः भवेत् इति संकल्पेन पुस्तकस्य अस्य निर्माणं कृतम्। संस्कृतभाषायाः विभिन्नानाम् अंशानां गद्य-पद्यरूपाणां सङ्कलनं पुस्तके अस्मिन् कृतम्।

एवमेव संस्कृतभाषायाः साहित्यस्य विज्ञानस्य च प्रचाराय संस्कृतपाठ्यपुस्तकानां निर्माणं विश्वविद्यालयद्वारा भविष्यति। एवं क्रमेण प्रकाशयिष्यमाणानां पुस्तकानां ''संस्कृतवाग्विलासः' इति सामान्यं नामकरणं कृतम्। एतेषां पुस्तकानां माध्यमेन संस्कृतवाचः विलासस्य सम्यक् ज्ञानं भवतु इति विचारः अस्य नामकरणे कारणम्। क्रमेण एकमेकं पुस्तकं 'मुद्रा' इति भविष्यति। यथा विलासस्य बहुषु प्रकारेषु सत्सु विविधाः मुद्राः अपि भवन्ति तथा संस्कृतवाग्विलासस्यापि मुद्राः पुस्तकरूपेण प्रकाशयिष्यन्ते। एवम् आहत्य अष्टमुद्राणां रूपेण संस्कृतपुस्तकानां प्रकाशनं सङ्कल्पितं वर्तते।

एतेषां पुस्तकानां माध्यमेन ज्ञानार्थिनः संस्कृतस्य विविधं ज्ञानं प्राप्नुवन्तु संस्कृतभाषा च लोकभाषा भूत्वा लोके विराजताम् इति आशास्यते। सर्वेभ्यः ज्ञानार्थिभ्यः मम शुभकामनाः।

- कुलगुरुः

## शुभाशंसन

संस्कृतभाषेचे अध्ययन करण्याची ज्यांची खूप इच्छा असते त्यांना अनेक छोटी छोटी संस्कृताची पुस्तके आज उपलब्ध आहेत. परंतु संस्कृतसाहित्याचा विकास ज्या क्रमाने झालेला दिसतो त्याप्रकारे पुस्तकाचे निर्माण केले तर विद्यार्थ्यांना खूप उपयोगी होईल या संकल्पाने हे पुस्तक तयार करण्यात आले. संस्कृतभाषेतील वेगवेगळ्या गद्यपद्यरूपी विषयांचा समावेश या पुस्तकात केला आहे.

अशाच प्रकारे संस्कृतभाषेतील साहित्य व विज्ञानाच्या प्रचाराकरिता संस्कृतपाठ्यपुस्तकांचे निर्माण विश्वविद्यालयाद्वारा केले जाईल. अशा क्रमाने प्रकाशित होणाऱ्या पुस्तकांचे 'संस्कृतवाग्विलासः' असे नाव ठेवण्यात आले आहे. या पुस्तकांच्या माध्यमाने संस्कृतवाणीच्या वैभवाचे चांगले ज्ञान सर्वांना मिळो या विचाराने या पुस्तकाचे 'संस्कृतवाग्विलासः' असे नाव ठेवण्यामागचे कारण आहे. क्रमाक्रमाने एक एक पुस्तक पुढे एक एक 'मुद्रा' म्हणून प्रकाशित होईल ज्या प्रकारे विलासाच्या विविध मुद्रा असतात त्याप्रमाणे संस्कृतवाग्विलासाच्या या पुस्तकरूपी मुद्रा प्रकाशित केल्या जातील. अशाप्रकारे एकूण आठ मुद्रांच्या रूपाने संस्कृत पुस्तकांचे प्रकाशन करण्याचा संकल्प केला आहे.

या पुस्तकांच्या माध्यमाने जिज्ञासु विद्यार्थ्यांना संस्कृतभाषेतील विविध ज्ञान प्राप्त होवो व संस्कृतभाषेला लोकभाषा करून या लोकात ती विराजमान होवो अशी आशा. सर्व जिज्ञासु, ज्ञानार्थी विद्यार्थ्यांना माझ्या शुभकामना.

- कुलगुरु

# अनुक्रमणिका

# संस्कृत-वर्णमाला

संस्कृतवर्णमालेत स्वरवर्ण व व्यंजनवर्णांचा समावेश आहे.

**स्वरवर्ण - १३**

ह्रस्वस्वर (५) अ, इ, उ, ऋ, ऌ

दीर्घस्वर (४) आ, ई, ऊ, ॠ

संयुक्तस्वर (४) ए, ऐ, ओ, औ

अयोगवाह स्वरवर्ण - ं (अनुस्वार) व ः (विसर्ग)

**व्यंजनवर्ण - ३३**

**स्पर्श व्यंजन वर्ण (२५)**

क वर्ग–क्, ख्, ग्, घ्, ङ्

च वर्ग – च्, छ्, ज्, झ्, ञ्

ट वर्ग – ट्, ठ्, ड्, ढ्, ण्

त वर्ग –त्, थ्, द्, ध्, न्

प वर्ग – प्, फ्, ब्, भ्, म्

**अंतस्थ व्यंजन वर्ण (४)**

य्, र्, ल्, व्

**उष्म व्यंजन वर्ण (४)**

श्, ष्, स्, ह्

**काही संयुक्त व्यंजन वर्ण -**

१) द् + य् = द्य्

२) क् + ष् = क्ष्

३) ज् + ञ् = ज्ञ्

४) श् + र् = श्र्

५) त् + र् = त्र्

## प्रथमः पाठः

# सुभाषितमाला - १



**या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता**
**या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।**
**या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता**
**सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा।।१।।**

कुंदफुलांप्रमाणे चंद्राप्रमाणे आणि तुषारांप्रमाणे गौरवर्ण असणारी, पांढरे वस्त्र परिधान केलेली, मनमोहक वीणा हातात असल्याने जिचा हात शोभून दिसतो आहे अशी, शोभणारे हात असणारी, पांढऱ्या कमलासनावर बसलेली, तसेच ब्रह्मा, अच्युत, शंकर इत्यादि देवांद्वारे जी सदैव वंदिलेली, समस्त बुद्धीचे मांद्य दूर करणारी भगवती सरस्वती देवी माझे रक्षण करो.

**कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।**
**आरूह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ।।२।।**

(मी) कवितारूपी शाखेवर आरोहण करून 'राम', 'राम' अशा मधुराक्षरांचे मधुरगान करणाऱ्या वाल्मीकि-कवी रूप कोकीळेला नमस्कार करतो.

**परोपकाराय वहन्ति नद्यः परोपकाराय फलन्ति वृक्षाः।**
**परोपकाराय दुहन्ति गावः परोपकाराय बुधा यतन्ते।।३।।**

परोपकारासाठी नद्या वाहतात, परोपकारासाठीच वृक्ष फलीभूत होतात, परोपकारासाठीच गायी दूध देतात, म्हणून बुद्धिमान लोक सर्वकाही परोपकारासाठीच करत असतात.

**शरदि न वर्षति गर्जति, वर्षति वर्षासु निःस्वनो मेघः।**
**नीचो वदति न कुरुते, न वदति सुजनः करोत्येव ।।४।।**



निःशब्द ढग शरद् ऋतुत गर्जत नाहीत व पाऊस देखील पाडत नाहीत तर ते वर्षाऋतूत (गरजणे सोडून)

पाऊस पाडतात. (तसेच) दुष्ट व्यक्ती फक्त बोलते, कृती करीत नाही, तर सज्जन बोलण्यात विश्वास न करता कृती करणारा असतो.

**माता निन्दति, नाभिनन्दति पिता, भ्राता न संभाषते,**
**भृत्यः कुप्यति नानुगच्छति सुतः, कान्तापि नो रज्यते।**
**अर्थं प्रार्थयतीति किं न कुरुते संभाषणं वा सुहृत्,**
**तस्माद् द्रव्यमुपार्जयन्ति सुजना द्रव्येण सर्वे वशाः।।५।।**

(एखाद्या निर्धनाला त्याची) आई सतत दोष देत असते. वडील कधीही प्रसन्न नसतात, भाऊ बोलत नसतो, सेवक रागावणारा असतो, मुलगा हा ऐकत नसतो, तर स्वतःच्या पत्नीचे मन जोपासने पण त्याला शक्य नसते. शिवाय, हा मला पैसा मागेल की काय? असा विचार करून मित्र देखील त्याच्याशी बोलत नसतात. निष्कर्षतः सर्वजण पैशाने वश होतात म्हणून सज्जन व्यक्ती हे धनोपार्जन करत असतात.

**पिबन्ति नद्यो न जलं स्वकीयं, स्वयं न खादन्ति फलानि वृक्षाः।**
**पिबन्ति गावो न पयः स्वकीयं, परोपकारेण सुखं लभन्ते।।६।।**

नद्या स्वतःचे पाणी स्वतः पीत नसतात, वृक्ष आपली फळं स्वतः खात नसतात, गायीं स्वतःचे दुध स्वतः पीत नसतात. तर, हे सर्व परोपकार करण्यातच सुख अनुभवत असतात.

**आत्मार्थं जीवलोकेऽस्मिन्, को न जीवति मानवः।**
**परं परोपकारार्थं, यो जीवति स जीवति।।७।।**

या जगात कोण मनुष्य स्वतःसाठी (स्वार्थापोटी) जगत नसतो? तरी देखील, दुसऱ्यांच्या हितांसाठी जो जगतो त्याचेच खरे जगणे होय.

**वदने दशन्ति दशनाः, रसना तत्स्वादमनुभवति।**
**रीतिरियं विमलानां, क्लिश्यन्ति यदन्यकार्येषु।।८।।**

तोंडातील दात हे चावण्याचे काम करत असतात, पण चवीचा आस्वाद मात्रा जीभ घेत असते. याहून हे स्पष्ट होते की 'दुसऱ्यांसाठी त्रास सहन करणे' ही निर्मळ चरितांची रीतच होय.

**उदयति यदि भानुः पश्चिमे दिग्विभागे**
**विकसति यदि पद्मं पर्वतानां शिलाग्रे।**
**प्रचलति यदि मेरुः शीततां याति वह्निः**
**न चलति खलु वाक्यं सज्जनानां कदाचित्।।९।।**

सूर्याचा उदय कदाचित् पश्चिमेला शक्य आहे, कमळाचे उमलणे पर्वतांच्या शिखरावर देखील शक्य आहे, तसेच मेरू पर्वताचे चालणे देखील शक्य आहे, अग्नी थंड होणे शक्य आहे. पण सज्जनांच्या वचनांमध्ये बदल होणे कदापि शक्य नाही.

**वहन्ति वर्षन्ति नदन्ति भान्ति,**
**ध्यायन्ति नृत्यन्ति समाश्रयन्ति।**

नद्यो घना मत्तगजा वनान्ताः,

प्रियाविहीनाः शिखिनः प्लवङ्गाः ।।१०।।

नद्या वाहत आहेत, ढगातून पावसांच्या सरी कोसळत आहेत, उन्मत्त हत्ती आवाज करत आहेत, वनांचे कोणे-कोणे शोभून दिसत आहेत. विरहीजन आठवणींत रमलेले आहेत, मोर नाचत आहेत, तर वानर हे (थकल्याने) विश्रांती करत आहेत.

## शब्दार्थ

जाड्यापहा - बुद्धीची मंदता दूर करणारी
पातु - रक्षण करो
कूजन्तम् - गात असणाऱ्या
आरुह्य - चढून
दुहन्ति - दूध देतात
गावः - गायी
यतन्ते - प्रयत्न करतात
निःस्वनः - आवाज न करणारा
कुरुते - करतो
भ्राता - भाऊ
भृत्यः - सेवक
कुप्यति - रागावतो
सुतः - मुलगा
कान्ता - पत्नी
सुहृत् - मित्र
द्रव्यं - संपत्ती
आत्मार्थम् - स्वतःसाठी
अस्मिन् - ह्यात
दशनाः - दात
रसना - जीभ
क्लिश्यन्ति - त्रास सहन करतात
भानुः - सूर्य
पद्मम् - कमळ
शिलाग्रे - शिळेवर
घनाः - मेघ
वनान्ताः - वनाचे सौंदर्य
शिखिनः - मोर
प्लवङ्गाः - वानर

**१) संधिरहित रूपे अशी आहेत.**

(१) ब्रह्मा + अच्युत + शङ्कर + प्रभृतिभिः + देवैः (२) बुधाः (३) निःस्वनः (४) नीचः (५) करोति + एव (६) न + अभिनन्दति (७) न +अनुगच्छति (८) कान्ता + अपि (९) प्रार्थयति +इति (१०) द्रव्यम् + उपार्जयन्ति (११) सुजनाः (१२) नद्यः (१३) गावः (१४) जीवलोके + अस्मिन् (१५) कः (१६) यः (१७) सः (१८) तत्स्वादम् + अनुभवति (१९) रीतिः + इयम् (२०) यद् + अन्यकार्येषु (२१) नद्यः (२२) घनाः (२३) मत्तगजाः

२) अनुस्वारासंबंधी पुढील धोरण विद्यार्थ्यांच्या लक्षात आणून देणे लाभदायक होईल. अन्त्य-'म्' च्या ठिकाणी पुढे व्यंजन असेल तर अनुस्वार लिहावा. अन्य वेळी म्हणजे पुढे स्वर असेल तर किंवा पुढे काहीच नसेल तर हलन्त 'म्' लिहावा।

**उदाहरणार्थ** - किम् + न = किं न।

द्रव्यम्+उपार्जयन्ति = द्रव्यमुपार्जयन्ति (द्रव्यं उपार्जयन्ति लिहू नये)

वाक्याच्या शेवटी आल्यास 'रामम्' लिहावे, 'रामं' लिहू नये।

×××

# द्वितीयः पाठः

# मूर्खाणाम् उपदेशः न कर्तव्यः



नर्मदातीरे विशालः वृक्षः अस्ति। तस्य कोटरे विविधाः खगाः सुखेन निवसन्ति। एकदा गगने मेघाः आगच्छन्ति, गर्जन्ति, वर्षन्ति च। पर्जन्यपीडिताः वानराः तस्य वृक्षस्य तलम् आश्रयार्थम् आगच्छन्ति। खगाः वानरान् पश्यन्ति। एकः खगः वदति – ''वानराः उष्णकाले पर्जन्यनिवारणार्थं गृहं किमर्थं न कुर्वन्ति? खगाः तृणैः कोटराणि रचयन्ति परं वानराः केवलं क्रीडन्ति, परस्परं कलहं कुर्वन्ति, कालस्य अपव्ययं कुर्वन्ति च। वानराः निश्चयेन मूर्खाः सन्ति। आलस्यं दुःखस्य कारणम्। उद्योगेन सर्वे सुखं लभन्ते'' इति। तदा खगस्य उपदेशेन वानराः क्रुध्यन्ति वदन्ति च – ''किमर्थं खगः व्यर्थम् उपदिशति पीडां करोति च?'' इति। तथापि खगः पुनः पुनः उपदिशति। तेन वानराः अत्यन्तं क्रुद्धाः भवन्ति, वृक्षम् आरोहन्ति, खगानां कोटराणि विनाशयन्ति च। खगाः केवलम् आक्रोशं कुर्वन्ति। विनाशं च गच्छन्ति। तस्मात् सज्जनाः कथयन्ति, 'ये मूर्खान् उपदिशन्ति ते विनाशं गच्छन्ति' इति।

**तात्पर्य –**

मूर्खांना उपदेश करणे म्हणजे विनाश ओढवून घेणे हे मूल्य या कथेतून सांगितले आहे.

## शब्दार्थ

| | |
|---|---|
| कोटरे – घरट्यात | तृणैः – गवताच्या काडयांनी |
| पर्जन्यः – पाऊस | क्रीडन्ति – खेळतात |
| पश्यन्ति – पाहतात | अपव्यय – वाया घालवणे |
| खगः – पक्षी | क्रुध्यन्ति – रागावतात |
| उपदिशन्ति – उपदेश करतात | विनाशयन्ति – नष्ट करतात |

अध्यापनाची दिशा –

वरील संस्कृत पाठ वाचवून घ्यावा; ह्यावर खालीलप्रमाणे प्रश्नोत्तरे घ्यावी व हा पाठ पुनः सोप्या संस्कृतातून प्रश्नोत्तररूपाने वदवून घ्यावा. जसे –

१.नर्मदातीरे कः अस्ति? । नर्मदातीरे वृक्षः अस्ति।

२.वृक्षः कुत्र अस्ति? । वृक्षः नर्मदातीरे अस्ति।

३.नर्मदातीरे विशालः कः, अस्ति? । नर्मदातीरे विशालः वृक्षः अस्ति।

४.तस्य कोटरे के निवसन्ति? तस्य कोटरे विविधाः खगाः निवसन्ति।

५.विविधाः खगाः कुत्र निवसन्ति?। विविधाः खगाः तस्य कोटरे निवसन्ति।

६.विविधाः के सन्ति?। विविधाः खगाः सन्ति।

७.कोटरे सुखेन के निवसन्ति?। कोटरे सुखेन विविधाः खगाः निवसन्ति।

अशा प्रकारे पाठातील प्रत्येक वाक्यावर होतील तेवढे सरळ व सोपे प्रश्न काढावेत व त्यांची उत्तरे वदवून व लिहवून घ्यावीत.

×××

## तृतीयः पाठः

# लोभः नाशस्य कारणम्



दण्डकारण्ये कर्पूरतिलकः नाम गजः वसति। एकदा शृगालाः तं गजं पश्यन्ति, चिन्तयन्ति च, 'यदि अयं गजः म्रियते तदा अनेकमासपर्यन्तं पर्याप्तं भोजनं भवति'। तदा एकः वृद्धः शृगालः प्रतिज्ञां करोति, 'अहं गजस्य मरणं साधयामि' इति। तदनन्तरं सः धूर्तः शृगालः तं गजं गच्छति साष्टाङ्गपातं प्रणामं करोति, वदति च – 'देव, अरण्ये पशूनां राजा नास्ति। सर्वे राजगुणाः त्वां भूषयन्ति तस्मात् सर्वे वनवासिनः पशवः त्वां राजानं कर्तुम् इच्छन्ति। शुभवेला अधुना एव वर्तते। तस्मात् त्वाम् अहं सत्वरं नयामि। तेन शुभवेला न विचलति' इति। राज्यलोभेन गजः आकृष्टः भवति। शृगालः अग्रे गच्छति। गजः तम् अनुसरति। शृगालः धावति। गजः अपि अनुधावति। अग्रे महापङ्कः वर्तते। परं लोभेन आकृष्टः गजः महापङ्कं न पश्यति तत्क्षणे एव सः तस्मिन् महापङ्के निपतति, मज्जति च। शृगालः हसति। गजः म्रियते। सर्वे शृगालाः आनन्दन्ति तं गजं खादन्ति च।

**तात्पर्य –**

राज्यलोभामुळे जसा हत्ती मारला गेला तसा अती लोभामुळे मनुष्यही मारला जाऊ शकतो. म्हणून माणसाने लोभ करू नये.

## शब्दार्थ

| | |
|---|---|
| गजः – हत्ती | नयति – नेतो |
| म्रियते – मरतो | महापङ्कः – दलदल |
| शृगालः – कोल्हा | मज्जति – बुडतो |

अध्यापनाची दिशा –

वरील पाठाचा आशय विद्यार्थ्यांच्या ध्यानात सहज येईल. ह्यावरही संस्कृतातून लहान लहान प्रश्नोत्तरे वदवून व लिहवून घ्यावी. जसे –

**अरण्ये कः वसति?। अरण्ये गजः वसति।**

**अरण्यस्य किं नाम? । अरण्यस्य 'दण्डकारण्यम्' इति नाम।**

**तस्य गजस्य किं नाम? । तस्य गजस्य कर्पूरतिलकः इति नाम।**

**कर्पूरतिलकः इति कस्य नाम? । कर्पूरतिलकः इति गजस्य नाम।**

**कर्पूरतिलकः गजः कुत्र वसति? । कर्पूरतिलकः गजःदण्डकारण्ये वसति।**

**एकदा तं के पश्यन्ति? । एकदा तं शृगालाः पश्यन्ति।**

**एकदा शृगालाः कं पश्यन्ति? । एकदा शृगालाः गजं पश्यन्ति।** इत्यादि.

'कर्ता', क्रियेच्या द्वारा 'जे' काही प्रामुख्याने मिळविण्याची इच्छा करतो ते असते 'कर्म' किंवा 'क्रिया' कर्त्याकडून मुख्यत्वाने ज्यावर घडते 'ते' ठरते 'कर्म'. 'कर्ता' सर्वसाधारणपणे प्रथमा विभक्तीत असतो तर 'कर्म' द्वितीयेत असते. नामांची 'कर्म' असताना होणारी द्वितीयेतील एकवचनी व बहुवचनी रूपे झालेल्या पाठांतून व श्लोकांतून ओळखून काढावी. तसेच, मागील पाठात दिलेली नामे व क्रियापदे ह्यांच्या साहाय्याने कर्ता, कर्म व क्रियापद वापरून छोटी छोटी वाक्ये विद्यार्थ्यांकडून वदवून व लिहवून घ्यावी.

**बालः शालां गच्छति।**

**भक्तः देवं नमति।**

**बालः फलं खादति।**

**कविः काव्यं करोति।**

**हरिः मेघं पश्यति।**

**बाला मालां रचयति।**

**गुरुः शिष्यं वदति।**

**बालाः शालां गच्छन्ति।**

**भक्ताः देवं नमन्ति। भक्ताः देवान् नमन्ति।**

**बालाः फलानि खादन्ति।**

**कवयः काव्यानि कुर्वन्ति।**

**हरिः मेघान् पश्यति।**

**बाला मालाः रचयति। बालाः मालाः रचयन्ति।**

**गुरुः शिष्यान् वदति। गुरवः शिष्यान् वदन्ति।** इत्यादी.

झालेल्या पाठातूनही अशी वाक्ये वदवून व लिहवून घ्यावीत.

जसे –**खगाः वानरान् पश्यन्ति। वानराः गृहं न कुर्वन्ति।**

**वानराः कलहं कुर्वन्ति। वानराः वृक्षम् आरोहन्ति।**

**वानराः कोटराणि विनाशयन्ति। एकः वृद्धः शृगालः प्रतिज्ञां करोति।**

इत्यादि.

खालील श्लोक वाचवून घ्यावे. ह्यातून कर्ता, कर्म व क्रियापद ओळखावयास लावावे.

**अमृतं वितरति चन्द्रः**
**विषमेव फणी सदा वमति।**
**वदति गुणगुणान् साधुर्**
**दोषं बहु दुर्जनो वदति।।१।।**

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते।
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति
कन्दैः फलैः मुनिवराः कृशतां न यान्ति।
संतोष एव पुरुषं कुरुते समर्थम्।।२।।

विरला जानन्ति गुणान्
विरलाः कुर्वन्ति निर्धने स्नेहम्।
विरलाः परकार्यरताः
परदुःखेनापि दुःखिता विरलाः।।३।।

स्वभावं चोपदेशेन करोति कथमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम्।।४।।

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे।
अम्भोनिधिर्वहति दुर्वहवाडवाग्निम्
अङ्गीकृतं सुकृतिनः परिपालयन्ति।।५।।

संधिरहित रूपे –

(१) विषम्+एव (२) साधुः (३) दुर्जनः (४) दुर्बलाः+ते (५) शुष्कैः+तृणैः+वनगजाः+बलिनः (६) फलैः (७) संतोषः +एव (८) परदुःखेन+अपि (९) दुःखिताः (१०) च+उपदेशेन (११) कथम्+अन्यथा (१२) सुतप्तम्+अपि (१३) पुनर्+गच्छति (१४) अद्य+अपि (१५) न+उज्झति (१६) कूर्मः (१७) अम्भोनिधिः

पहिल्या पाठात दिलेल्या नामांच्या व क्रियापदांच्या साहाय्याने कर्ता, कर्म व क्रियापदांच्या जोड्या गिरवून घ्याव्या. एकदा प्रत्येकाचे एकवचन तर लगेच त्याचे बहुवचन गिरवून घ्यावे. उदाहरणार्थ खालील कोष्टकात पहिल्या समूहात कर्ता, कर्म व क्रियापद एकवचनात आहेत. दुस–या समूहात कर्ता व क्रियापद एकवचनात असून कर्म बहुवचनात आहे. तिस–या समूहात कर्ता व क्रियापद बहुवचनात असून कर्म एकवचनात आहे.

| | | |
|---|---|---|
| वनम् | वनम् | वनानि |
| शालाम् | शालाम् | शालाः |
| गृहम् | गृहम् | गृहाणि |
| रामःनदीं गच्छति | बालाः नदीं गच्छन्ति | रामः नदीः गच्छति |
| गुरुम् | गुरुम् | गुरून् |
| हरिम् | हरिम् | हरीन् |
| गङ्गाम् | गङ्गाम् | गङ्गाः |
| देवम् | देवम् | देवान् |

×××

# चतुर्थः पाठः

# स्तुतिप्रियः काकः



एकदा कश्चित् काकः मांसखण्डं लभते। सः तं मुखे धारयति, तुङ्गवृक्षस्य शाखायाम् उपविशति च। कश्चित् धूर्तः जम्बूकः तं पश्यति चिन्तयति च – 'काकमुखे यद् मांसखण्डं वर्तते तद् अहं कथं लभे। एवं करोमि। अहं तं स्तौमि'। तदनन्तरं सः शृगालः वृक्षस्य तलं गच्छति, काकं पश्यति, वदति च – 'मित्र काक, अहं सत्यं भणामि यद् त्वम् अतीव सुन्दरः असि। तव सदृशम् अन्यं खगं न अहं पश्यामि। पश्यामि तव रमणीयान् पक्षान्। अवलोकयामि तव रुचिरां श्यामलां कान्तिम्। अनुभवामि तव अवयवानां सुकुमारताम्। त्वं निपुणं नृत्यसि। त्वं मधुरं गायसि। जानामि तव औदार्यम्। त्वं मम इच्छां निश्चयेन पूरयसि इति अहं मन्ये। तव गानं शृणोमि धन्यः च भवामि' इति अहम् इच्छामि। काकः स्तुतिं शृणोति गर्विष्ठः च भवति। जम्बूकस्य कपटं सः न जानाति। यदा सः गानम् आरभते तदा मांसखण्डः तरुतले पतति। जम्बूकः तत् गृह्णाति दूरं पलायते च। काकः केवलं पुनः कर्कशम् आरटति।

**तात्पर्य – खोट्या स्तुतीमुळे हुरळून जाऊ नये.**

## शब्दार्थ

काकः – कावळा
उपविशति – बसतो
धूर्तः – लबाड
जम्बूकः – कोल्हा
स्तौमि – स्तुती करतो
सदृशम् – सारखा
आरटति – ओरडतो
पश्यामि – पाहतो
रमणीयः – सुंदर
रुचिरः – सुंदर
सुकुमारता – कोमलपणा
शृणोमि – ऐकतो
तरुतले – झाडाच्या तळाशी

**अध्यापनाची दिशा–**

मागील धड्याप्रमाणे यावरही प्रश्नोत्तरे करवून घ्यावी. ह्यात प्रथम पुरुषाची व द्वितीय पुरुषाची रूपे आहेत. त्यांच्यावरही प्रश्न करवून घ्यावे. जसे –

अहं किं लभे?। अहं काकमुखे यद् मांसखण्डं वर्तते तत् लभे।

अहं तदर्थं किं करोमि?। अहं तं स्तौमि। इत्यादि.

अहम् (मी) हे अस्मद् ह्या प्रथमपुरुषी सर्वनामाचे प्रथमेचे एकवचनी 'कर्तरि' रूप तर त्याचेच वयम् (आम्ही) हे बहुवचनी रूप. 'त्वम्' हे 'युष्मद' ह्या द्वितीय पुरुषी सर्वनामाचे प्रथमेचे एकवचनी 'कर्तरि' रूप तर त्याचेच 'यूयम्' हे बहुवचनी रूप.

पहिल्या पाठात दिलेले, तसेच इतरही धातू ह्या कर्त्यांशी जोडून वाक्ये लिहवून व करवून घ्यावी.

| | | | |
|---|---|---|---|
| अहम् (मी) | गच्छामि, धावामि, पश्यामि, भवामि, लभे खादामि, नृत्यामि, वगैरे. | वयम् (आम्ही) | गच्छामः, धावामः, पश्यामः, भवामः, लभामहे, खादामः नृत्यामः वगैरे. |
| त्वम् (तू) | गच्छसि, धावसि, पश्यसि, भवसि, लभसे खादसि, नृत्यसि वगैरे | यूयम् (तू) (तूम्ही) | गच्छथ, धावथ, पश्यथ, भवथ, लभध्वे, खादथ, नृत्यथ वगैरे |

विद्यार्थ्यांना खालील श्लोक वाचावयास सांगावे. प्रथमपुरुषी व द्वितीय पुरुषी कर्ते व क्रियापदे ओळखता येतील. ती ओळखावयास लावावी.

**गच्छामि नित्यं मम पाठशालां**
**पठामि पाठान् गुरुणोपदिष्टान्।**
**ज्ञानं लभेऽहं सहितो वयस्यैर्**
**अतः प्रिया मे खलु पाठशाला।।१।।**

**वसुदेवसुतं देवं कंसचाणूरमर्दनम्।**
**देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्।।२।।**

**आपद्गतं हससि किं द्रविणान्धमूढ**
**लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम्।**
**एतान् प्रपश्यसि घटान् जलयन्त्रचक्रे**
**रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः।।३।।**

**कान् पृच्छामः सुराः स्वर्गे, निवसामो वयं भुवि।**
**किं वा काव्यरसः स्वादु, किंवा स्वादीयसी सुधा।।४।।**

**श्रीरामचन्द्रचरणौ मनसा स्मरामि,**
**श्रीरामचन्द्रचरणौ वचसा धरामि।**
**श्रीरामचन्द्रचरणौ शिरसा नमामि,**
**श्रीरामचन्द्रचरणौ शरणं प्रपद्ये।।५।।**

**संधिविच्छेद –**

(१) गुरुणा+उपदिष्टान् (२) लभे+अहम् (३) सहितः+वयस्यैः (४) भवति+इति (५) किम्+अत्र (६) रिक्ताः (७) भरिताः (८) भरिताः + च (९) निवसामः





xxx

## पञ्चमः पाठ

# पान्थवृक्षसंवादः



पान्थः -को भवान् ?

वृक्षः -किमर्थं पृच्छसि?। किमर्थं प्रश्नेन माम् आयासयसि? किमर्थं स्वेन मार्गेण न गच्छसि?

पान्थः -अपि त्वं मम प्रश्नेन विषीदसि? तर्हि न पृच्छामि। न त्वां प्रश्नेन आयासयामि। स्वेन मार्गेण गच्छामि।

वृक्षः -न विषीदामि। अहं प्रयच्छामि तुभ्यम् उत्तरम्।

पान्थः -त्वं निगूहसि दुःखं विषादं वा। त्वम् अलीकं वदसि न विषीदामि इति।

वृक्षः -मित्र, सत्यं विषीदामि। अहं दुःखम् अनुभवामि। अहं श्मशानवृक्षः भवामि।

पान्थः -किं तेन?

वृक्षः -अपि पश्यसि तं वटवृक्षम्?

पान्थः -अवश्यं पश्यामि।

वृक्षः -जनाः तस्य घनां छायाम् अभिलषन्ति।

पान्थः -अपि नाम तेन विषीदसि?

वृक्षः -न खलु स्वप्ने अपि तेन विषीदामि। अहम् अपि घनां छायां करोमि। परं जनाः ताम् न अभिलषन्ति।

पान्थः -किं तेन?

वृक्षः -किम् एवं वदसि? मम छाया अपि लोकानां न उपयुक्ता इति दुःखम् अनुभवामि।

पान्थः -अहो तव उपकारे तत्परता! वयं मनुष्याः स्वार्थेन तुष्यामः। त्वं पुनः परोपकारम् इच्छसि। त्वं परोपकारेण तुष्यसि। धन्यः त्वम्।

वृक्षः-सफलः अहम्।

तात्पर्य - **सज्जन लोक परोपकाराने संतुष्ट होतात.**

## शब्दार्थ

आयासयसि – त्रास देतोस
विषीदसि – दुःखी होतोस
प्रयच्छामि – मी देतो
श्मशानवृक्षः – स्मशानातील झाड
वटवृक्ष – वडाचे झाड
छाया – सावली
अभिलषन्ति – इच्छा करतात
तुष्यामः – आम्ही संतुष्ट होतो

**सरावासाठी प्रश्नोत्तरे –**

| | |
|---|---|
| त्वं नित्यं कुत्र गच्छसि? | अहं नित्यं पाठशालां गच्छामि। |
| तत्र त्वं किं करोषि? | अहं तत्र पाठान् पठामि। |
| तत्र त्वं किं पठसि? | तत्र अहं पाठान् पठामि। |
| तत्र त्वं किं लभसे? | तत्र अहं ज्ञानं लभे। |
| एषा वा तव पाठशाला? | आम्, एषा मम पाठशाला। इत्यादि. |

×××

## षष्ठः पाठः

# पुनः त्वं मूषकः भव



कस्मिंश्चित् तपोवने एकः मुनिः वसति। एकदा सः स्नानार्थं नदीं गच्छति। स्नानात् अनन्तरं सः अर्घ्यं यच्छति। तदा सः काकस्य मुखे मूषकं पश्यति। सः काकं प्रति पाषाणखण्डं प्रक्षिपति। तेन मूषकः काकस्य मुखात् अधः पतति। मुनिः तं मूषकं पालयति। एकदा मार्जारः तं मूषकं प्रति धावति। मूषकः भयेन मुनिं प्रति धावति। मुनिः तं भयकारणं पृच्छति। यदा सः मूषकः वदति – 'मार्जारः मम भयकारणम् अस्ति' इति तदा मुनिः तं वदति – 'त्वं मार्जारः भव, चिरं जीव, गच्छ, क्रीड च' इति। तदनन्तरम् एकदा तं मार्जारं प्रति कुक्कुरः धावति। भीतः मार्जारः पुनः मुनिं प्रति धावति कथयति च भयकारणम्। तदा मुनिः पुनः भणति, 'त्वं कुक्कुरः भव, चिरं जीव, गच्छ, खेल च' इति। पुनः एकदा तं कुक्कुरं प्रति व्याघ्रः धावति। सः कुक्कुरः पुनश्च मुनिं गच्छति भयकारणं वदति च। मुनिः अपि पुनश्च भणति 'त्वं व्याघ्रः भव, चिरं जीव, सर्वत्र निर्भयं भ्रम, यथेष्टं सञ्चारं कुरु, गच्छ इति'।

अन्ये जनाः तं व्याघ्रं पश्यन्ति वदन्ति च – 'एषः न सत्यार्थेन व्याघ्रः किन्तु मुनेः मूषकः। सः व्याघ्रः जनान् भणति – 'भोः भोः जनाः, अहं सत्यं व्याघ्रः एव अस्मि'। जनाः वदन्ति – 'तावत् सत्यं न मन्यामहे यावत् त्वं मुनिं न भक्षयसि। मुनिं भक्षय। सत्यं व्याघ्रः भव' इति। सः व्याघ्रः गर्जति, मुनेः भक्षणार्थं तं प्रति धावति च। मुनिः अन्तर्ज्ञानेन व्याघ्रस्य हेतुं जानाति तं वदति च – 'हे व्याघ्र, मा गर्वं कुरु, मा बलं दर्शय, मा गर्ज, मा क्रूरं पश्य, गच्छ, चिरं जीव, किन्तु पुनः मूषकः भव' इति। सः व्याघ्रः पुनः मूषकः भवति।

**तात्पर्य – बळाचा गर्व करू नये.**

## शब्दार्थ

| | |
|---|---|
| प्रक्षिपति – फेकतो | क्रीडा – खेळ |
| मूषकः – उंदीर | कथयति – सांगतो |
| अधः – खाली | कुक्कुरः – कुत्र |
| मार्जारः – मांजर | व्याघ्रः – वाघ |
| पृच्छति – विचारतो | मन्यामहे – आम्ही मानतो. |

**अध्यापनाची दिशा –**

ह्या पाठावरही मागीलप्रमाणेच संस्कृतातून होतील तेवढी सरळ प्रश्नोत्तरे वदवून व लिहवून घ्यावी.

आज्ञार्थी क्रियापदे बहुधा द्वितीय पुरुषाशी संबद्ध होऊन वापरात आलेली आढळतात. तृतीय पुरुषाशी देखील ती संबद्ध होतात. 'अमुक कार्य होवो; तो अमुक कार्य करो किंवा अमुक कार्य करण्याची परवानगी असो' – असे अर्थ तृतीय पुरुषाशी ही क्रियापदे संबद्ध झाली की कळतात.

पहिल्या पाठात दिलेले धातू द्वितीय पुरुषाशी व तृतीय पुरुषाशी संबद्ध होऊन त्यांच्या क्रियापदाचे रूपे कशी होतात, ते कर्त्याशी जोडून पाहावे, जसे –

| द्वि.पु. एकवचन 'त्वम्' | द्वि.पु. ब.वचन 'यूयम्' | तृ.पु. एकवचन 'सः' | तृ.पु. ब.वचन 'ते' |
|---|---|---|---|
| कुरु | कुरुत | करोतु | कुर्वन्तु |
| गच्छ | गच्छत | गच्छतु | गच्छन्तु |
| खाद | खादत | खादतु | खादन्तु |
| भक्षय | भक्षयत | भक्षयतु | भक्षयन्तु |
| पश्य | पश्यत | पश्यतु | पश्यन्तु |
| खेल | खेलत | खेलतु | खेलन्तु |
| धाव | धावत | धावतु | धावन्तु |
| जीव | जीवत | जीवतु | जीवन्तु |
| पिब | पिबत | पिबतु | पिबन्तु |
| लभस्व | लभध्वम् | लभताम् | लभन्ताम् |
| रमस्व | रमध्वम् | रमताम् | रमन्ताम् |

आज्ञार्थ्याच्या रूपांच्या सरावासाठी खालील श्लोक म्हणवून घ्यावेत.

**यानि कानि च पापानि जन्मान्तरकृतानि च।**
**क्षमस्व तानि सर्वाणि रक्ष रक्ष महेश्वर ।।१।।**

भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते।
संप्राप्ते सन्निहिते काले, न हि न हि रक्षति डुकृञ्करणे ।।२।।

इतरपापफलानि यथेच्छया विलिखितानि सहे चतुरानन।
अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख।।३।।
घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः।
जिह्वां विद्यानिधिः पातु कण्ठं भरतवन्दितः।।४।।

अपसर मधुकर दूरं परिमलबहुलेऽपि केतकीकुसुमे।
इह न हि मधुलवलाभो भवति परं धूलिधूसरं वदनम्।।५।।

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।

अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः।।७।।
सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु दुःखभाग् मास्तु कश्चन।।८।।

संधिविच्छेद –
(१) परिमलबहुले+अपि (२) मधुलवलाभः (३) अद्य+एव (४) मरणम् + अस्तु (५) सर्वे + अपि (६) मा+अस्तु (७) सुधा+अस्ति (८) कुर्मः + तद् (९) तद्+अत्र

×××

# सप्तमः पाठः

# घण्टानादस्य राक्षसस्य कथा



पुरा वरदा नाम नगरी आसीत्। तस्याः समीपे आम्रकूटः पर्वतः आसीत्। तस्य पर्वतस्य शिखरे घण्टानादः नाम राक्षसः वसति इति लोकाः अवदन्। एकदा कश्चित् चोरः देवालयात् सुवर्णघण्टाम् अचोरयत्। नगररक्षकात् भयेन सः चोरः तत् पर्वतशिखरम् अगच्छत् गुहायाम् अविशत् च। तत्र कश्चित् व्याघ्रः तम् अपश्यत् अभक्षयत् च। चोरस्य हस्तात् पतितां घण्टां वानराः अपश्यन् अगृह्णन् च। एकः वानरः महता कौतुकेन तया घण्टया नादम् अकरोत्। अन्ये अपि वानराः क्रमशः तया घण्टया नादम् अकुर्वन्।

नगरे जनाः तं नादं कर्णाभ्याम् अशृण्वन् परस्परम् अवदन् च– 'शृणुत, घण्टानादः नाम राक्षसः मनुष्यं खादति, घण्टानादं च करोति' इति। सर्वे नागरिकाः भयेन व्याकुलाः अभवन्। परम् एकः चतुरः मनुष्यः शङ्कया पीडितः अभवत् अचिन्तयत् च – ''असमये पुनः पुनः च राक्षसः घण्टया किमर्थं नादं कुर्यात्। निश्चितं मर्कटाः एव घण्टया खेलन्ति'' इति।

ततः सः चतुरः मनुष्यः नागरिकान् अवदत् – ''अहं केन अपि उपायेन राक्षसं मारयामि तस्य घण्टाम् आनयामि च। किन्तु द्रव्येण विना उपाययोजना अशक्या एव'' इति। तदा नागरिकाः तस्मै चतुराय विपुलं धनम् अयच्छन्।

धनेन सन्तुष्टः सः चतुरः वानराणां कृते कतिपयानि फलानि अगृह्णात्, पर्वतस्य शिखरम् अगच्छत्, तत्र सर्वाणि फलानि अक्षिपत् च। वानराः फलानि अपश्यन्, घण्टाम् अत्यजन्, फलानि अगृह्णन्, भक्षणार्थं दूरम् अधावन् च।

चतुरः घण्टया सह ग्रामम् अधावत्, नागरिकान् घण्टाम् अदर्शयत्, अवदत् च ''मया सः घण्टानादः नाम राक्षसः महत्या युक्त्या केवलेन काष्ठेन मारितः'' इति। सर्वे नागरिकाः आनन्देन अनृत्यन्।

**तात्पर्य – चातुर्याने संकटावर मात करता येते.**

## शब्दार्थ

| | |
|---|---|
| वसति–राहतो | अशृण्वन् – ऐकले |
| सुवर्णघण्टा – सोन्याची घंटा | मर्कटाः – माकडे |
| अवदन् – म्हणाले | अयच्छन् – दिले |
| अविशत् – प्रवेश केला | अगृह्णन् – घेतली |
| अभक्षयत् – खाल्ले | काष्ठेन – लाकडाने |

**अध्यापनाची दिशा –**

पाठ वाचवून घ्यावा. मागील धड्याप्रमाणे यावरही प्रश्नोत्तरे वदवून व लिहवून घ्यावी.

पुरा वरदा नाम का आसीत्?
पुरा वरदा नाम नगरी आसीत्।
पुरा किं नाम्नी नगरी आसीत्?
पुरा वरदा नाम नगरी आसीत्। इत्यादि.

ह्या पाठात भूतकाळाची रूपे वापरली आहेत. ही तृतीयपुरुषी एकवचनी व बहुवचनी रूपे अभ्यासावी. पूर्वीच्या धातूच्या पूर्वीच्याच नामाशी आता भूतकाळी क्रियापदे वापरून जोड्या करवून घ्याव्या व लिहवून काढाव्या. जसे –

**कर्ता (तृ.पु.ए.व.) क्रियापद**
**(भूतकाळी तृ.पु.ए.व.)**
**बालः आसीत्**
**फलम् अपतत्**
**मेघः अवर्षत्**
**बालः (जलम्) अपिबत्**

**कर्ता (तृ.पु.ब.व.) क्रियापद**
**(भूतकाळी तृ.पु.ब.व.)**
**बालाः आसन्**
**फलानि अपतन्**
**मेघाः अवर्षन्।**
**बालाः (जलम्) अपिबन्।** इत्यादि.

यापूर्वी वाचलेल्या चारही कथा भूतकाळात सांगता येतील. विद्यार्थ्यांकडून त्या तशा करवून घ्याव्या.
उदा – **नर्मदातीरे विशालः वृक्षः आसीत्। तस्य कोटरे विविधाः खगाः सुखेन निवसन्ति स्म। एकदा गगने मेघाः आगच्छन्, अगर्जन्, अवर्षन् च।** इत्यादि.

वर्तमान काळातील क्रियापदाला 'स्म' लावून भूतकाळ दर्शविला जाऊ शकतो.

उदा – रामः गच्छति स्म किंवा रामः अगच्छत्।

ह्या पाठात तृतीया विभक्तीची काही रूपे आढळतील. कर्मणि प्रयोगात कर्त्याची तृतीया असते. करण किंवा साधन किंवा हेतू दर्शविण्यासही तृतीयेचा वापर करतात. 'सह' व 'विना' ह्या अव्ययांनाही तृतीयेची अपेक्षा असते. खालील वाक्ये अभ्यासवून घ्यावी –

**हरिणा लक्ष्मीः शोभते। पुरुषः दैवेन धनं न लभते। मनुष्यः उद्योगेन एव धनं लभते। पुरुषः विद्यया धनं लभते। लोकः द्रव्येण वशं याति। रामः बाणेन रावणं हन्ति। राजा शत्रुं खड्गेन नाशयति। बालः दण्डेन अश्वं प्रहरति। गुरुः शिष्येण सह गच्छति। रात्रिः चन्द्रेण विना न शोभते।** इत्यादी.

मागे दिलेले शब्द तृतीया विभक्तीत एकवचनात व बहुवचनात वापरून वाक्ये करवून घ्यावी. जसे –

**गुरुः शिष्येण सह गच्छति।**
**बालः मुखेन जलं पिबति।**
**बालः कन्दुकेन क्रीडति।**
**शिष्यः गुरुणा सह गच्छति।**

**गुरवः शिष्यैः सह गच्छन्ति।**
**बालाः मुखैः जलं पिबन्ति।**
**बालाः कन्दुकैः क्रीडन्ति।**
**शिष्याः गुरुभिः सह गच्छन्ति।**

**×××**

# सुभाषितमाला - २

**काव्यशास्त्रविनोदेन, कालो गच्छति धीमताम्।**
**व्यसनेन तु मूर्खाणां, निद्रया कलहेन वा।।१।।**

बुद्धिमंताचा वेळ काव्यकलेत, शास्त्राभ्यासात व विनोदात जातो तर अज्ञानीपुरुषांचा वेळ मात्र व्यसनात, झोपेत आणि भांडणात जात असतो.

**श्रोत्रं श्रुतेनैव न कुण्डलेन, दानेन पाणिर्न तु कङ्कणेन।**
**विभाति कायः खलु सज्जनानां, परोपकारेण न चन्दनेन।।२।।**

कानांची शोभा कर्णकुंडलांमुळे नसून शास्त्र ऐकण्याने असते, हातांची शोभा हस्तबंधामुळे नसून दान दिल्याने असते, याचप्रमाणे, सज्जनपुरुषांच्या शरीराची शोभा ही चंदनलेपनामुळे नसून परोपकार केल्याने असते.

**शशिना च निशा, निशया च शशी, शशिना निशया च विभाति नभः।**
**मणिना वलयं वलयेन मणिः, मणिना वलयेन विभाति करः।।३।।**

चंद्रामुळे रात्रीची, तर रात्रीमुळे चंद्राची शोभा वाढत असते, आकाशाची शोभा हि चंद्र व रात्री या दोघांमुळे असते. (तसेच) मण्यांमुळे हस्तबंधांची, तर हस्तबंधांमुळे मण्यांची शोभा वाढत असते, त्याही पेक्षा, हाताची शोभा ही मणी व हस्तबंध या दोघांमुळे असते.

**रामाय रामभद्राय रामचन्द्राय वेधसे।**
**रघुनाथाय नाथाय सीतायाः पतये नमः।।४।।**

हितंकर, चंद्रस्वरूप व गुणवंत अशा रघुकुळाचे मुकुटस्वरूप असणाऱ्या जगन्नाथाला म्हणजे सीतेच्या पती श्रीरामाला (आम्ही) नमस्कार करतो.

**आकाशात् पतितं तोयं यथा गच्छति सागरम्।**
**सर्वदेवनमस्कारः केशवं प्रति गच्छति।।५।।**

आकाशातून पडलेलं पाऊसाचं पाणी ज्याप्रमाणे समुद्राला जाऊन मिळतं, त्याप्रमाणेच, सर्वदेवांना केलेला नमस्कार देखील केशवाकडेच जातो.

**क्षमा शस्त्रं करे यस्य दुष्टस्तस्य करोति किम्।**
**अतृणे पतितो वह्निः, विनायासेन शाम्यति।।६।।**

ज्याच्या हातात क्षमारूपी शस्त्र आहे, त्याचं दुर्जन काय बिघडवू शकणार ? (अर्थात काहीही नाही). ज्याप्रमाणे गवत नसणाऱ्या ठिकाणी पडलेली अग्नी प्रयत्न न करताच विझते.

**विदेशेषु धनं विद्या व्यसनेषु धनं मतिः।**
**परलोके धनं धर्मः शीलं सर्वत्र वै धनम्।।७।।**

परप्रांतात विद्या ही धनाप्रमाणे मौलिक असते, संकटकाळी सद्बुद्धी मौलिक असते, परलोकात धर्म हा मौलिक ठरत असतो तर, सदाचरण हे सर्वठिकाणी मोलाचे ठरत असते.

**शैले शैले न माणिक्यं मौक्तिकं न गजे गजे।**
**साधवो नहि सर्वत्र चन्दनं न वने वने।।८।।**

प्रत्येक पर्वतावर माणिक्य नसते, प्रत्येक हत्तीच्या मस्तकावरती मोती नसतो, तसेच, सर्व ठिकाणी सज्जनपुरुष नसतात व प्रत्येक वनात चंदनवृक्ष देखील नसतो.

**रामो राजमणिः सदा विजयते रामं रमेशं भजे,**
**रामेणाभिहता निशाचरचमू रामाय तस्मै नमः।**
**रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहम्,**
**रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर।।९।।**

राजसमूहात शिरोमणीरूप असे श्रीराम सतत विजयी असोत, (अशा) या सीतापती रामाची मी भक्तिपूर्वक आराधना करतो, ज्याने निशाचरांचा वध केला त्या श्रीरामाला माझा नमस्कार असो. श्रीरामांना सोडून इतर कोणताही मार्ग श्रेष्ठ नाही म्हणून मी श्रीरामाचा दास (भक्त) रूपाने आहे. माझे मन श्रीरामात सतत लीन असो, हे राम, तूच माझी रक्षा कर.

**संधिविच्छेद –**

(१) मुक्तः + अथवा (२) कालः + गच्छति (३) श्रुतेन + एव (४) पाणिः + न (५) दुष्टः + तस्य (६) पतितः+वह्निः (७) विना+आयासेन (८) साधवः + न (९) रामः+राजमणिः (१०) रामेण + अभिहता (११) निशाचरचमूः+रामाय (१२) रामात्+न+अस्ति (१३) दासः+अस्मि+अहम् (१४) मामम्+उद्धर

×××

## नवमः पाठः

# कृषीवलस्य पुत्रस्य कथा

अकोलाग्रामे कश्चित् हरिः नाम कृषीवलः अवसत्। सः कृषिम् अकृषत्। परं सदैव तस्य कृषिः निष्फला अवर्तत। एकदा सूर्यस्य किरणैः संतप्तः सः वृक्षस्य तले छायायाम् उपविष्टः। तदा वृक्षस्य समीपे एव वल्मीकस्य उपरि सः महासर्पम् अपश्यत्। सर्वेषां सर्पात् भयं वर्तते। परं सः मनसि अचिन्तयत् – ''असौ न सर्पः किन्तु कृषिदेवता। अहं तां कदापि न अपूजयम्। अतः कृषिः न फलति'' इति।



सर्पाय दुग्धं रोचते इति चिन्तयित्वा सः पात्रे दुग्धं निधाय वल्मीकस्य समीपे अगच्छत्प्रार्थयत् च। ''सर्पाय नमः। कृषिदेवतायै नमः। कृषिलक्ष्म्यै नमः'' इति संप्रार्थ्य हरिः सर्पाय दुग्धम् अयच्छत् पुनः वृक्षस्य तलं प्रत्यागच्छत् च।

अहो आश्चर्यम्। वृक्षात् पञ्च पक्वानि मधुराणि फलानि अपतन्। वल्मीकात् एका सुवर्णमुद्रा उदगच्छत् वृक्षस्य तलं च आगच्छत्।

सः कृषीवलः प्रसन्नेन मनसा पुनः पुनः प्रार्थयत् – ''कृषिदेवताभ्यः नमः। सर्वेभ्यः देवेभ्यः नमः'' इति। एवं प्रतिदिनं सः क्षेत्रं गच्छति, तत्र सर्पाय दुग्धं यच्छति, वृक्षात् पतितानि फलानि तथा वल्मीकात् उद्गतां सुवर्णमुद्रां गृह्णाति, गृहम् आगच्छति च।

एकदा सः कर्तव्यवशः ग्रामम् अगच्छत्। सर्पस्य पूजाकार्ये तेन पुत्रः नियुक्तः। पुत्रः सर्पाय दुग्धं यच्छति, आश्चर्येण पश्यति, वृक्षतले फलानि तथा वल्मीकात् उद्गतां सुवर्णमुद्राम् अपि पश्यति च। सः मनसि चिन्तयति।

''अस्मिन् वल्मीके प्रभूताः सुवर्णमुद्राः सन्ति। प्रतिदिनम् अत्र आगमनं प्रार्थनाकरणं वा मह्यं न रोचते। सर्पं हत्वा अहं ताः सर्वाः सुवर्णमुद्राः एकवारम् एव गृहीत्वा धनिकः भवामि'' इति। एवं चिन्तयित्वा तेन सर्पस्य शीर्षे लगुडेन प्रहारः कृतः। तेन कुपितः सः सर्पः तं पुत्रं तथा दशति यथा सः तत्कालम् एव पञ्चत्वं गतः।

**तात्पर्य – धनप्राप्तीसाठी घाई कामाची नाही. घाईमुळे कार्य नष्ट होते.**

### शब्दार्थ –

कृषीवलः – शेतकरी
कृषिः – शेती
वल्मीक – वारूळ
प्रत्यागच्छत् – परतला
सुवर्णमुद्रा – सोन्याची नाणी
उद्गता – वर आली

| | |
|---|---|
| सर्पः – साप | प्रभुताः – पुष्कळ |
| रोचते – आवडते | लगुडेन – लाकडी दांडयाने |
| अयच्छत् – दिले | पञ्चत्वं गतः – मरण पावला |

**अध्यापनाची दिशा –**

हा पाठ वाचवून घ्यावा. ह्याही पाठावर पूर्वीप्रमाणेच शक्य तेवढ्या प्रश्नांची उत्तरे वदवून व लिहवून घ्यावी.

ह्या पाठात चतुर्थी, पंचमी, षष्ठी व सप्तमी या विभक्तींची रूपे अभ्यासवून घ्यावी. ज्याला द्यायचे त्याची चतुर्थी. (संप्रदाने चतुर्थी) 'नमः' ह्या अव्ययालाही चतुर्थीची अपेक्षा असते. रुच् – आवडणे, ज्याला आवडते त्याची चतुर्थी. ज्याच्यापासून दूर होणे दर्शवायचे असेल त्याची पंचमी. फळ झाडापासून दूर होते – तेव्हा पडले असे आपण म्हणतो. अशा अर्थी "वृक्षात् फलं पतति" अशी रचना होते. संबन्ध दाखववावयाचा असल्यास षष्ठी व आधार दर्शवावयाचा असल्यास सप्तमीचा वापर करावयाचा असतो.

मागे दिलेल्या नामांची छोटी छोटी वाक्ये – चतुर्थी, पंचमी, षष्ठी व सप्तमी विभक्ती वापरून करवून घ्यावी. जसे -

**दशरथस्य पुत्राय रामाय नमः। याचकः ग्रामात् ग्रामं भ्रमति। सैनिकः अश्वात् पतति। कृष्णः आसने** उपविशति। इत्यादी.

×××

## दशमः पाठः

# मनोरथाः

कस्मिंश्चित् नगरे कश्चित् भिक्षुकः वसति स्म। सः भिक्षया कांश्चित् सक्तून् अलभत। भिक्षार्जितैः सक्तुभिः सः घटम् अपूरयत्। तं च घटं नागदन्ते अवलम्ब्य तस्य अधः खट्वां निधाय सः एकदृष्ट्या घटम् अपश्यत्। एकदा खट्वायां शयितः सः अचिन्तयत्–अधुना अयं घटः सक्तुभिः परिपूर्णः। यदि दुर्भिक्षं भवेत् तर्हि अस्य विक्रयेण रूप्यकाणां शतं भवेत्। तेन रूप्यकशतेन अहम् अजाद्वयम् आनयामि। षड्भ्यः मासेभ्यः अनन्तरं बहवः अजाः भवेयुः। तेषां विक्रयेण प्रभूतं सुवर्णं विन्दामि। तेन विशालं गृहं रचयामि। अनन्तरं कः अपि धनिकः मम गृहम् आगच्छेत्, मह्यं रूपवतीं कन्यां च यच्छेत्। तस्यां मे पुत्रः जायेत। अहं तस्य गोविन्दः इति नाम कुर्याम्।

यदि मम गृहस्य समृद्धिं दृष्ट्वा कश्चन चोरः मम गृहम् आगमिष्यति तर्हि अहं तं पादप्रहारेण एवं ताडयेयम् इति उक्त्वा तेन तथा पादप्रहारः दत्तः यथा सः घटः भग्नः। तस्य मुखं च सक्तुभिः पाण्डुरम् अभवत्।

**तात्पर्य – केवळ स्वप्नरंजन योग्य नाही.**

## शब्दार्थ –

भिक्षुकः – भिक्षा मागणारा
सक्तुः – सत्तूचे पीठ
घटः – मडके
नागदन्त – खुंटी
खट्वायां – खाटेवर
शयितः – झोपलेला
दुर्भिक्षः – दुष्काळ
विक्रयेण – विकून
अजा – बकरी
विन्दामि – मिळवतो
ताडयेयम् – मारीन
उक्त्वा – बोलून
पाण्डुरम् – पांढरे

**अध्यापनाची दिशा –**

हा पाठ पूर्वीप्रमाणे वाचवून घ्यावा. ह्यावर शक्य तेवढी प्रश्नोत्तरे वदवून व लिहवून घ्यावी. ह्या पाठात विध्यर्थाची रूपे वापरली आढळतील. व्हावे, करावे, बोलावे, जावे, खावे, म्हणावे, गावे किंवा होईल, करील, जाईल, खाईल, म्हणेल, गाईल, वगैरे प्रकारचे अर्थ या रूपांद्वारा दाखविता येतात.

मागील शब्द व धातू ह्यांच्या विध्यर्थात जोड्या जमवून छोटी वाक्ये करवून घ्यावी. जसे –

**बालः प्रतिदिनम् अध्ययनं कुर्यात्।**

**बालाः प्रतिदिनम् अध्ययनं कुर्युः।**

इत्यादी.



XXX

## एकादशः पाठः

# व्यवहारज्ञान-शून्यानां पण्डितानां कथा

यवतमालनगरे केचन त्रयः बान्धवाः वसन्ति स्म। ते गुरुगृहं गत्वा ज्ञानं प्राप्य विद्यां सम्पाद्य पण्डिताः भवितुम् इच्छन्ति स्म। एवं गुरुगृहे कानिचिद् वर्षाणि स्थित्वा ते विद्यार्जनम् अकुर्वन्। किन्तु ते पुस्तकस्थाम् एव विद्याम् अपठन्। केवलं पुस्तकस्थां विद्यां ज्ञात्वा कथं ते पण्डिताः भवेयुः? यतः व्यवहारस्य ज्ञानं विना ये वर्तन्ते ते विनाशं गच्छन्ति।

एवं ते त्रयः अपि पण्डिताः गुरुगृहे विद्यां परिसमाप्य स्वगृहं गन्तुं प्रस्थिताः। अथ ते किमपि वनम् आगताः। तत्र गुरुगृहात् समानीतं पाथेयं भुक्त्वा जलं पीत्वा पुनश्च मार्गम् आक्रमितुं ते प्रस्थिताः। तत्र एव कस्यचित् सिंहस्य अस्थीनि दृष्ट्वा तेषाम् एकतमेन स्वज्ञानेन तानि सर्वाणि संचित्य तैः सिंहः निर्मितः। अथ अपरः तद् विलोक्य स्वज्ञानस्य प्रयोगं कर्तुं समुत्सुकः अभवत् सः मन्त्रं जप्त्वा तस्मिन् सिंहे प्राणान् प्रेरयितुं समुत्सुकः अभवत्। अथ तृतीयः तद् अवलोक्य जीवति सिंहे स्वविनाशम् अपश्यत्। सः अब्रवीत् – 'अहम् इमं वृक्षम् आरोहामि तदनन्तरं त्वम् इमं सिंहं जीवय' इति। अथ द्वितीयः यावत् मन्त्रं पठित्वा तस्मिन् सिंहे प्राणान् आरोपयति, सिंहः च गर्जित्वा तं भक्षयति तावत् प्रथमः पलायते।

**तात्पर्य – केवळ पुस्तकी ज्ञान कामाचे नाही. त्या ज्ञानाला व्यवहारज्ञानाची जोड हवी.**

### शब्दार्थ –

वसन्ति स्म – राहत होते
गत्वा – जाऊन
प्राप्य – प्राप्त करून
भवितुम् – होण्यासाठी
पठित्वा – वाचून
परिसमाप्य – संपवून
अस्थीनि – हाडे
प्रेरयितुम् – प्रेरणा देण्यासाठी
अवलोक्य – पाहून
आरोहामि – चढतो

**अध्यापनाची दिशा –**

पाठ वाचवून पूर्वीप्रमाणेच प्रश्नोत्तरे वदवून व लिहवून घ्यावी. 'ऊन' कृदन्ताची (पूर्वकाल वाचकांची) रूपे यात आढळतील. जाऊन, खाऊन, गाऊन, पाहून, वगैरे कल्पना कशा दाखवाव्या ते पाहावे. 'त्वा' व 'य' हे दोन प्रत्यय धातूंना लागलेले दिसतील. धातू उपसर्गरहित असेल तर 'त्वा' प्रत्यय व उपसर्गसहित असेल तर 'य' प्रत्यय लागतो हे विद्यार्थ्यांच्या लक्षात आणून द्यावे. पूर्वीच्या धातूंची अशी (क्त्वान्त किंवा ल्यबन्त) पूर्वकाळ वाचके तयार करवून नामाशी जोडून छोटी छोटी वाक्ये तयार करवून घ्यावी. जसे –

**बालः शालां गत्वा, पाठं पठित्वा, गुरुं नत्वा, फलानि भुक्त्वा, जलं पीत्वा सायं गृहम् आगच्छति।**

इत्यादी.

पुढील श्लोक वाचवून घ्यावे. त्यावर प्रश्नांची उत्तरे घ्यावी.

**दृष्ट्वा तु पाण्डवानीकं, व्यूढं दुर्योधनस्तदा।**
**आचार्यमुपसंगम्य, राजा वचनमब्रवीत्।।१।।**

**यो ध्रुवाणि परित्यज्य, अध्रुवाणि निषेवते।**
**ध्रुवाणि तस्य नश्यन्ति, अध्रुवं नष्टमेव च।।२।।**

**संधिविच्छेद –**

(१) दुर्योधनः + तदा (२) आचार्यम् + उपसंगम्य (३) वचनम् + अब्रवीत् (४) नष्टम् + एव

×××

## द्वादशः पाठः

# भगीरथप्रयत्नः



राजा भगीरथः पूर्वजान् उद्धर्तुम् इच्छति। तदर्थं सः गङ्गां प्राप्तुं तपश्चर्यां करोति। पापानि विनाशयितुं पुण्यानि च प्रदातुं भगवती गङ्गा एव प्रभवति। किन्तु इयं गङ्गा स्वर्गात् इह भूतले आगन्तुं कथं प्रभवेत्? अतः सः परमं देवं महादेवं गत्वा तं स्तोतुम्, आराधयितुं, पूजयितुं, नन्तुं च आरभते।

भगीरथस्य घोरां तपस्यां दृष्ट्वा महादेवः सन्तुष्टः तं वरं याचितुं कथयति । भगीरथः प्रार्थयते – "हे महादेव न अहं राज्यं लब्धुं, सुखं प्राप्तुम्, अर्थं वा संग्रहीतुम् उत्सुकः किन्तु मम पूर्वजान् उद्धर्तुं तेषां पापानि च क्षालयितुम् अहम् इच्छामि। अतः अहं तव समीपं गङ्गायाः अवतारणार्थं समागतः। त्वम् एव माम् उपकर्तुं समर्थः" इति।

तेन प्रसन्नः शिवः भगवतीं गङ्गां पृथ्वीतले अवतरितुम् आदिशति। भगीरथप्रयत्नेन एव परमपावनी गङ्गा लोकान् समुद्धर्तुं पृथ्वीतले अवतीर्णा।

**तात्पर्य – कठीणातील कठीण कामही सतत केलेल्या प्रयत्नांमुळे सिद्ध होते.**

### शब्दार्थ –

उद्धर्तुम् – उद्धार करण्यास
याचितुम् – मागण्यास
प्रार्थयते – प्रार्थना करतो
क्षालयितुम् – धुवून टाकण्यास
अवतीर्णा – अवतरली

**अध्यापनाची दिशा –**

वरील पाठावरही पूर्वीप्रमाणेच प्रश्नोत्तरे वदवून व लिहवून घ्यावी.



जाण्यासाठी, खाण्यासाठी, उद्धारासाठी इ. अर्थांमध्ये 'तुम्' हा प्रत्यय ह्यात 'तुमन्ताची' रूपे आहेत.

धातूला लागतो. त्या रूपाला 'हेत्वर्थक' असे नाव आहे. कधी कधी एखाद्या वाक्यात दोन किंवा अधिक क्रिया येतात. त्यापैकी एक मुख्य असून इतर गौण असतात. जिने वाक्यार्थ पूर्ण होतो तिला मुख्य क्रिया म्हणतात व तिच्याहून इतर क्रियांना गौण क्रिया म्हणतात. अशा ठिकाणी मुख्य क्रिया गौण क्रियांच्या उद्देशाने घडली असा अर्थ अभिप्रेत असेल तर इतर गौण क्रिया दर्शविणा-या धातूवरून 'तुम्' प्रत्यय लावण्यात येतो. उदाहरणार्थ, 'राम स्नान करण्यासाठी नदीवर जातो' ह्या वाक्यात 'जाणे' ही मुख्य क्रिया असून 'स्नान करणे' ही गौण क्रिया आहे. 'राम जातो तो स्नान करण्यासाठी' असा अर्थ अभिप्रेत असल्यामुळे 'जाणे' ह्या क्रियेचा उद्देश 'स्नान करणे' हा आहे. म्हणून स्नान करणे या अर्थाच्या 'स्ना' धातूवरून 'तुम्' प्रत्यय लावून 'स्नातुम्' हे रूप करावे लागेल व संस्कृतात 'रामः स्नातुं नदीं गच्छति' असे म्हणावे लागेल.

पूर्वी दिलेल्या धातूपासून हेत्वर्थके तयार करवून पूर्वी दिलेल्या नामाशी जोडून त्यांची वाक्ये तयार करवून आणि लिहवून घ्यावी.

**बालः जलं पातुं नदीं गच्छति।**
**हरिः पुस्तकं पठितुं शालां गच्छति।**
**वानरः फलानि खादितुं वनं गच्छति।** इत्यादी.

खालील श्लोक वाचवून घ्यावे. हेत्वर्थकांचा उपयोग समजावून द्यावा.

**व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते।**
**छेत्तुं वज्रमणीन् शिरीषकुसुमप्रान्तेन संनह्यते।।**
**माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते।**
**नेतुं वाञ्छति यः खलान् पथि सतां सूक्तैः सुधास्यन्दिभिः।।१।।**
**शब्दादीन् विषयान् भोक्तुं चरितुं दुश्चरं तपः।**
**पर्याप्तोऽसि प्रजाः पातुम् औदासीन्येन वर्तितुम्।।२।।**

**संधिविच्छेद रूपे –**

(१) तन्तुभिः+असौ (२) क्षाराम्बुधेः + ईहते (३) पर्याप्तः+असि.

**×××**

## त्रयोदशः पाठः

# दुष्यन्तस्य पुत्रदर्शनम्

स्वर्गात् प्रतिनिवृत्तः दुष्यन्तः मारीचमुनेः आश्रमम् आगतः। तत्र शकुन्तलायाः पुत्रः सर्वदमनः तेन दृष्टः। तं बालकं दृष्ट्वा अनपत्यतया तेन अपूर्वः आनन्दः अनुभूतः। परम् ईदृशस्य परमानन्दस्य न किमपि कारणं तेन ज्ञातम्। सिंहस्य शावकेन सह बालस्य क्रीडाम् अवलोक्य दुष्यन्तस्य अन्तःकरणं प्रमुदितं जातम्। पुत्रप्रेम्णा एव नृपस्य हृदयं बालकं प्रति आकृष्टम्।



ततः तेन नृपेण तस्य बालकस्य हस्ते चक्रवर्तिलक्षणानि अवलोकितानि। तेन तस्य मनसि अपरम् आशास्थानं जातम्। तथा च आत्मसदृशं बालकस्य रूपं तेन अवलोकितम्। एवं, न असौ मुनिकुमारकः किन्तु पुरुवंशे जातः क्षत्रियकुमारः इति तेन ज्ञातम्। तस्मात् दुष्यन्तः हृष्टः सन्तुष्टः च।

अपि च 'शकुन्तलावण्यं पश्य' इति अक्षराणि श्रुत्वा ध्वनिसाम्यात् 'कुत्र मे माता शकुन्तला' इति तेन बालकेन सहसा पृष्टम्। अतः अयम् आत्मनः एव पुत्रः इति तेन निश्चितम्। तेन च असौ अतीव आनन्दितः जातः। परमवात्सल्येन च सः पुत्रः तेन आलिङ्गितः। एतादृशं मधुरं मीलनं दृष्ट्वा शकुन्तला अपि हर्षनिर्भरा सञ्जाता।

### शब्दार्थ -

प्रतिनिवृत्तः - परतला
अनपत्यतया - पुत्र नसल्यामुळे
ईदृशस्य - ह्या सारखा
प्रमुदितम् - आनन्दित
असौ - हा
शकुन्तः - पक्षी

**अध्यापनाची दिशा -**

ह्याही पाठावर मागील प्रमाणे शक्य तेवढी प्रश्नोत्तरे वदवून व लिहवून घ्यावी.

ह्यात भूतकाळवाचक धातुसाधित विशेषणे (कर्मणि) वापरलेली आहेत. भूतकाळ, क्रियापदाद्वारा दर्शविण्याऐवजी धातूला 'क्त' (त) हा प्रत्यय लावून साधलेल्या विशेषणाद्वारा दर्शविता येतो.

मागील १, २, ३, ४, व ५ ह्या धड्यांचा पुनः अभ्यास घ्यावा. त्यातील भूतकाळाचा अपेक्षित अर्थ ही विशेषणे वापरून कसा व्यक्त करता येतो त्याची प्रात्यक्षित द्यावी. भूतकालवाचक धातुसाधितांचा वापर करून ते धडे पुनः लिहवून घ्यावे. जसे -

**'गृहं किमर्थं न कुर्वन्ति'? ऐवजी 'गृहं किमर्थं न कृतम्'?**

इत्यादी.

तसेच मागील धातूंचीही विशेषणे (कर्मणि भूतकाळवाचक) करावी व छोट्या वाक्यात योजावी. जसे –

**हरिणा फलं खादितम्।**
**कविना काव्यं कृतम्।**
**सीतया माला रचिता।**
**देवेन बालः रक्षितः।** इत्यादी.

ही एकवचनी रूपे झाली. अशीच बहुवचनी रूपे करता येतील. जसे –

**हरिणा फलानि खादितानि ।**
**कविना काव्यानि कृतानि।**
**सीतया मालाः रचिताः ।**
**देवेन बालः रक्षितः।** वगैरे.

खालील श्लोक वाचवून घ्यावे. त्यावरही प्रश्नोत्तरे घ्यावी. भूतकाळवाचक धातुसाधितविशेषणे अभ्यासवून घ्यावी.

**नलिकागतमपि कुटिलं न भवति सरलं शुनःपुच्छम्।**
**तद्वत् खलजनहृदयं बोधितमपि नैव याति माधुर्यम्।।१।।**

**भद्रं कृतं, कृतं मौनं कोकिलैर्जलदागमे।**
**दर्दुरा यत्र वक्तारः तत्र मौनं हि शोभनम्।।२।।**
**सुखमापतितं सेव्यम् दुःखमापतितं तथा।**
**चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च।।३।।**

**संधिविच्छेद –**

(१) नलिकागतम्+अपि (२) बोधितम्+अपि (३) न+एव (४) कोकिलैः+जलदागमे (५) दर्दुराः + वक्तारः (६) सुखम्+आपतितम् (७) दुःखम्+आपतितम्.

×××

# चतुर्दशः पाठः

# विषमा दैवगतिः

एकदा एकः मधुकरः सन्ध्याकाले एकस्मिन् कमलकोशे निलीनः अभवत्। तस्य सहचरी तम् अवदत् - 'नाथ, अत्र चिरं मा तिष्ठेः। एतत् स्थानं निवासाय न उचितम् इति मन्ये। शीघ्रं गच्छेम अस्मात् स्थानात्। शृणुयाः मम वचनम्। मानयेः मम वाक्यम्। मा तिरस्कुर्याः मम विचारम्। अहं पुनः पुनः वदामीति त्वम् अत्र मा निवसेः, मा तिष्ठेः, सत्वरं चलेम एतस्मात् स्थानात्' इति।

मधुकरः अवदत् - ''प्रिये, का त्वरा? अहं मन्ये त्वम् अत्र अपरिचिता। त्वं कमलकोशे कदापि न अवसः। अतः त्वं गन्तुम् उत्कण्ठसे। अहम् अत्र बहुवारम् आगच्छम्। बहुवारम् अवसम्। अतः अहं गन्तुं न उत्कण्ठेय । किं च, त्वं कमलस्य मकरन्दरसं कदा अपि न अपिबः । अतः एवं वदसि। मकरन्दस्य मधुगन्धं त्वं कदा अपि न अजिघ्रः। अतः गन्तुम् उत्कण्ठसे। अहं कमलस्य मकरन्दरसं बहुवारम् अपिबम्। मधुगन्धम् अहं बहुवारम् अजिघ्रम्। कमलस्य कोमलस्पर्शम् अन्वभवम्। रात्रेः का भीतिः? रात्रिः गच्छेत्। सुप्रभातं भवेत्। यावत्प्रभातं मकरन्दरसं पिबेम। मधुगन्धं जिघ्रेम। पुनः गच्छेम च अन्यत्र'' इति।

एवं मधुकरस्य मधुकर्याः च संवादः प्राचलत्। परं हन्त! एकः गजः तत्र आगच्छत् कमलं च उत्पाटयत्। मधुकरस्य मनोरथान् च क्षणेन एव अचूर्णयत्।

**तात्पर्य - अति लोभ करू नये.**

## शब्दार्थ

मधुकरः - भुंगा
त्वरा - घाई
मा तिरस्कुर्या - डावलू नकोस
मकरन्दः - मध
अजिघ्रम् - सुगंध घेतला
उत्पाटयत् - उपटले

**अध्यापनाची दिशा**

वरील पाठ वाचवून घ्यावा. प्रश्नोत्तरे वदवून व लिहवून घ्यावी. ह्यात भूतकाळाची व विध्यर्थाची प्रथम व द्वितीय पुरुषाची रूपे आढळतील. पुढीलप्रमाणे मागील विविध धातूंच्या रूपांचा छोट्या छोट्या वाक्यातून वापर करवून त्यांचा अभ्यास करवून घ्यावा.

**प्रथम भूतकाळ**

| प्र.पु.ए.व. | प्र.पु.ब.व. |
|---|---|
| अहं दुग्धम् अपिबम्। | वयं दुग्धम् अपिबाम। |
| त्वं जलम् अपिबः। | यूयं जलम् अपिबत। |

अहं कथाम् अकथयम्। वयं कथाम् अकथयाम।
त्वं कथाम् अकथयः। यूयं कथाम् अकथयत।

विध्यर्थ

अहं गृहे निवसेयम्। वयं गृहे निवसेम।
त्वं गृहे निवसेः। यूयं गृहे निवसेत।
अहं शालां गच्छेयम्। वयं शालां गच्छेम।
त्वं शालां गच्छेः। यूयं शालां गच्छेत।
इत्यादी.

खालील श्लोक वाचवून घ्यावे.

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयात् एष धर्मः सनातनः।।१।।

मातरं पितरं भक्त्या तोषयेन्न प्रकोपयेत्।
मातृशापेन नागानां सर्पसत्रेऽभवत् क्षयः।।२।।

लालयेत् पञ्च वर्षाणि दश वर्षाणि ताडयेत्।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत्।।३।।

घटं भिन्द्यात् पटं छिन्द्यात् कुर्याद् रासभरोहणम्।
येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत्।।४।।

त्यजेत् क्षुधार्ता महिला स्वपुत्रम्। खादेत् क्षुधार्ता भुजगी स्वमण्डम्।।
बुभुक्षितः किं न करोति पापम्। क्षीणा नरा निष्करुणा भवन्ति।।५।।

चक्षुःपूतं न्यसेत् पादम्। वस्त्रपूतं पिबेज्जलम्।
सत्यपूतां वदेत् वाणीम्। मनःपूतं समाचरेत्।।६।।

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।।७।।

नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः।
आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम्।।८।।

पुंस्त्वादपि प्रविचलेद् यदि यद्यधोऽपि,
यायाद् यदि प्रणयने न महानपि स्यात्।

अभ्युद्धरेत् तदपि विश्वमितीदृशीयम्,
केनापि दिक् प्रकटिता पुरुषोत्तमेन।।९।।

सदसि विदुरभीष्मद्रोणशारद्वतानां,
पतिभिरमरकल्पैः पञ्चभिः पालितापि।
अभवदथ तदानीं द्रौपदी दुःखपात्रं,
बलवति सति दैवे बन्धुभिः किं विधेयम्।।१०।।

भ्रमन् वनान्ते नवमञ्जरीषु,
न षट्पदो गन्धफलीमजिघ्रत्।
सा किं न रम्या स च किं न रन्ता,
बलीयसी केवलमीश्वरेच्छा।।११।।

**संधिविच्छेद**

(१) सत्यम्+अप्रियम् (२) न+अनृतम् (३) एषः+धर्मः (४) तोषयेत् + न (५) सर्पसत्रो + अभवत् (६) मित्रवद् +आचरेत् (७) स्वम् + अण्डम् (८) क्षीणाः + नराः (९) निष्करुणाः + भवन्ति (१०) पिबेत् + जलम् (११) उद्धरेद्+आत्मना+आत्मानम् (१२) न+आत्मानम्+अवसादयेत् (१३) आत्मा+एव (१४) हि+आत्मनः+बन्धुः+आत्मा+एव (१५) रिपुः+आत्मनः (१६) न+आत्मानम्+अवमन्येत (१७) पूर्वाभिः+असमृद्धिः (१८) श्रियम्+अन्विच्छेद्+न+एनाम् (१९) पुंस्त्वात्+अपि (२०) यदि+अधः+अपि। (२१) महान्+अपि (२२) तद्+अपि (२३) विश्वम्+इति+ईदशी+इयम् (२४) केन+अपि (२५) पतिभिः + अमरकल्पैः (२६) पालिता+अपि (२७) अभवत्+अथ (२८) षट्पदः + गन्धफलीम्+अजिघ्रत् (२९) केवलम्+ईश्वरेच्छा.

×××

# पञ्चदशः पाठः

# तस्मात् युध्यस्व कौन्तेय



भारतीय युद्धे रणमुखे युद्धाय उद्यतान् स्वबान्धवान् अर्जुनः अपश्यत्। तत्र द्रोणः, भीष्मः, कृपः इति प्रमुखाः स्वकीयाः आप्ताः अभवन्। तान् दृष्ट्वा अर्जुनस्य हृदयं करुणया कम्पितम्। सः अचिन्तयत् -- ''किं मया इमे स्वबान्धवाः हन्तव्याः? इमे सर्वे ज्येष्ठाः आदरणीयाः पुरुषाः। वस्तुतः एतेषां सम्मानः मया करणीयः। एते मया वन्दनीयाः, भरणीयाः पोषणीयाः च। हन्त! हन्त!! किम् इदं दारुणं कर्म अहं करोमि? अहम् एतान् मारयितुं प्रवृत्तः। यद् मया न कर्तव्यं तद् अहं करोमि। यत् निन्द्यं, गर्हणीयं तद् अहम् अनुतिष्ठामि''।

''एते अस्मान् हन्तुं प्रवृत्ताः। एते अपि धर्मं न पश्यन्ति। एते धर्मं न पश्यन्ति चेत् मा पश्यन्तु। मया तु धर्मः अवश्यं पालनीयः। अहं भीष्मद्रोणप्रमुखान् ज्येष्ठान् न मारयामि'' इति। एवं विचार्य युद्धं न करोमि इति निश्चित्य अर्जुनः युद्धे तूष्णीम् अतिष्ठत्।

तदा श्रीकृष्णः अर्जुनम् अवदत् - अर्जुन, कः अयं तव व्यामोहः? धर्मयुद्धात् अन्यत् क्षत्रियस्य कल्याणकरं न विद्यते। त्वं तु युद्धस्य उपक्रमे एव शोकेन कवलितः। किं त्वया पराक्रमः विस्मर्तव्यः रणात् च पलायितव्यम्? त्वं भयेन रणात् पलायितः इति शत्रवः त्वां निन्देयुः। तत् निन्दावचनं किं त्वया सोढव्यम्?

अर्जुन उत्तिष्ठ। पुण्येन एव क्षत्रियाः युद्धं लभन्ते। अस्मिन् युद्धे त्वया शत्रवः जेतव्याः, राज्यं प्राप्तव्यम् कीर्तिः च लब्धव्या। क्षत्रियाणाम् अयम् एव धर्मः न पुनः रणात् पलायनम्। अर्जुन, हन्तव्याः एव एते बान्धवाः अपि। श्रीकृष्णस्य वचनेन अर्जुनः युद्धाय प्रावर्तत, जयं च अलभत।

**तात्पर्य - भावनांपेक्षा कर्तव्यपालन महत्त्वाचे.**

## शब्दार्थ -

उद्यतान् - प्रवृत्त झालेल्यांना
आप्ताः - नातलग
हन्तव्याः - मारावे
तूष्णीम् अतिष्ठत् - गप्प झाला
व्यामोहः - मानसिक गोंधळ
कवलित - ग्रासला

**अध्यापनाची दिशा –**

या पाठावरही मागील प्रमाणेच प्रश्नोत्तरे वदवून व लिहवून घ्यावी. ह्यात विध्यर्थी विशेषणे आढळतील. करावयाचे, खावयाचे गावयाचे, ऐकावयाचे किंवा करावयास योग्य, ऐकावयास य़ोग्य वगैरे प्रकारचे अर्थ दाखविण्यास ह्यांचा उपयोग होतो. अनीय, तव्य व य हे प्रत्यय लावून विध्यर्थी विशेषणे तयार करता येतात. खालील श्लोक वाचवून घ्यावे.

**न भेतव्यं न बोद्धव्यं न श्राव्यं वादिनो वचः।**
**झटिति प्रतिवक्तव्यं सभासु विजिगीषुभिः।।१।।**

**किमासेव्यं पुंसां सलिलमनवद्यं द्युसरितः।**
**किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।।**
**किमाराध्यं पुण्यं किमभिलषणीयं च करुणा।**
**यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति।।२।।**

**संधिविच्छेद –**

(१) किम्+आसेव्यम् (२) सलिलम्+अनवद्यम् (३) किम्+ एकान्ते (४) किम्+आराध्यम् (५) किम् + अभिलषणीयम्

×××

# परिशिष्ट - १

भाषेत क्रियाविचार महत्त्वाचा. क्रिया कोण करतो? कुठल्या काळी करतो? हे फारच महत्त्वाचे प्रश्न. तसेच करणारा एक आहे की अनेक आहेत? करणारा स्त्रीलिंगी आहे की पुंलिंगी की नपुंसकलिंगी? करणारा 'मी' आहे म्हणजे प्रथम पुरुषी आहे की 'तू' आहेत – म्हणजे द्वितीय पुरुषी आहे की कोणी तिसरीच व्यक्ती आहे म्हणजे तृतीय पुरुषी आहे तसेच क्रिया घडते आहे, की घडली आहे की घडणार आहे की घडावी किंवा घडो असे वाटते – वगैरे पाठोपाठ मनात येणारे प्रश्नही वाक्यरचना करताना फार महत्त्वाचे आहेत. ह्या प्रश्नांकडे विद्यार्थ्यांचे लक्ष वेधून संस्कृतातील वाक्यरचना अभ्यासवून घेणे अधिक लाभाचे होईल.

संस्कृतात नामाला प्रत्यय लावून त्याचा वाक्यातील क्रियेशी असलेला संबंध दाखविला जातो. हा संबंध कधी कर्ता म्हणून असतो, कधी कर्म, तर कधी करण (साधन), तर कधी संप्रदान, तर कधी अपादान, तर कधी अधिकरण म्हणून असतो.

क्रिया दर्शविणारे असतात ते धातू. त्यांना प्रत्यय लागून तयार होते क्रियापद. हे प्रत्यय मग क्रियेचा काळ व ती करणाऱ्याचे एकत्व किंवा अनेकत्व दर्शवितात; तसेच कर्त्याच्या पुरुषाचेही ज्ञान घडवितात. धातूंना लागणारे हे प्रत्यय कर्त्याच्या पुरुष व वचनाप्रमाणे बदलतात पण लिंगाप्रमाणे बदलत नाहीत.

| कर्ता (एकवचन) | क्रियापद<br>वर्तमानकाळ तृतीय पुरूष | (एकवचन) |
|---|---|---|
| बालः | अस्ति | तिष्ठति |
| मेघः | गच्छति | इच्छति |
| अश्वः | पश्यति | रक्षति |
| वानरः | धावति | क्रीडति |
| देवः | नृत्यति | पिबति |
| सीता | वदति | सेवते |
| गुरुः | भवति | लभते |
| माला | खादति | रमते |
| शाला | मोदते | करोति |
| कविः | वसति | हसति |
| कपिः | खेलति | पठति |
| वनम् | कथयति | पतति |
| पुस्तकम् | वहति | गायति |
| हरिः | नमति | चलति |
| भानुः | रचयति | ताडयति |
| जलम् | यच्छति | फलति |

| | | |
|---|---|---|
| नदी | वर्षति | पूजयति |
| ज्ञानम् | जयति | नन्दति |
| कमलम् | हरति | पचति |
| देवी | गर्जति | धरति |

| | क्रियापद | |
|---|---|---|
| कर्ता (बहुवचन) | वर्तमानकाळ तृतीय पुरूष | (बहुवचन) |
| बालाः | सन्ति | तिष्ठन्ति |
| मेघाः | गच्छन्ति | इच्छन्ति |
| अश्वाः | पश्यन्ति | रक्षन्ति |
| वानराः | धावन्ति | क्रीडन्ति |
| देवाः | नृत्यन्ति | पिबन्ति |
| सीताः | वदन्ति | सेवन्ते |
| गुरवः | भवन्ति | लभन्ते |
| मालाः | खादन्ति | रमन्ते |
| शालाः | मोदन्ते | कुर्वन्ति |
| कवयः | वसन्ति | हसन्ति |
| कपयः | खेलन्ति | पठन्ति |
| वनानि | कथयन्ति | पतन्ति |
| पुस्तकानि | वहन्ति | गायन्ति |
| हरयः | नमन्ति | चलन्ति |
| भानवः | रचयन्ति | ताडयन्ति |
| जलानि | यच्छन्ति | फलन्ति |
| नद्यः | वर्षन्ति | पूजयन्ति |
| ज्ञानानि | जयन्ति | नन्दन्ति |
| कमलानि | हरन्ति | पचन्ति |
| देव्यः | गर्जन्ति | धरन्ति |

वरील कोष्टकातून एकेक कर्ता घेऊन त्याच्या क्रियापदांशी अर्थदृष्ट्या जमतील तेवढ्या जोड्या जमवून, वदवून व लिहवून घ्याव्या. जसे –

बालः **अस्ति, गच्छति, पश्यति, धावति, नृत्यति, वदति, खादति, मोदते, खेलति, कथयति, पठति, तिष्ठति वगैरे.**

असेच नामांचेही क्रियापदांशी प्रथम एकवचनी व नंतर बहुवचनी संबंध जोडून, वदवून व लिहवून घ्यावे. मग एकेक क्रियापद घ्यावे व त्याच्याशी अनेक कर्त्यांचा संबंध जोडून अर्थवाही जोड्या जमवून, वदवून व लिहवून घ्याव्या. हेही एकवचनी व बहुवचनी स्वरूपात गिरवून घ्यावे. जसे –

| | |
|---|---|
| **अस्ति** | **बालः; सीता; रामः; गुरुः; कविः; अश्वः; हरिः; वानरः; देवः; वनम्; जलम् वगैरे.** |
| **सन्ति** | **बालाः; सीताः; रामाः; गुरवः; कवयः; कपयः; अश्वाः; हरयः; वानराः; देवाः; वनानि ; जलानि, वगैरे.** |

नामांची संख्या व क्रियापदांची संख्या वाटेल तेवढी वाढवून घ्यावी. पण सर्वसाधारणपणे नेहमी वापरात असणारी अकारान्त पुंलिंगी व नपुंसकलिंगी, आकारान्त व ईकारान्त स्त्रीलिंगी व इकारान्त व उकारान्त पुलिंगी नामे घ्यावी.

क्रियापदेही फक्त वर्तमानकाळी व तृतीय पुरुषी एकवचनी आणि बहुवचनी घ्यावी व तीही सर्वसाधारणपणे नित्य वापरातील घ्यावी. त्या रचनांचा अभ्यास करवून घेतानाही छोटे छोटे व सुटसुटीत प्रश्न करावे.

**जसे** – बालः हसति वगैरे जोड्या केल्यावर विचारावे – बालः किं करोति? बालः हसति। कः हसति? बालः हसति। वगैरे.

×××

# परिशिष्ट २

**संख्यावाचकानि**

| पुं. | स्त्री. | नपुं. |
| --- | --- | --- |
| एकः | एका | एकम् |
| द्वौ | द्वे | द्वे |
| त्रयः | तिस्रः | त्रीणि |
| चत्वारः | चतस्रः | चत्वारि |

पञ्च, षट्, सप्त, अष्ट, नव, दश, एकादश, द्वादश, त्रयोदश, चतुर्दश, पञ्चदश, षोडश, सप्तदश, अष्टादश, एकोनविंशतिः, किंवा नवदश, विंशतिः, एकविंशतिः, द्वाविंशतिः, त्रयोविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, नवविंशतिः किंवा एकोनत्रिंशत्, त्रिंशत्.

चत्वारिंशत्,

पञ्चाशत्,

षष्टिः,

सप्ततिः,

अशीतिः,

नवतिः,

शतम्.

**काही नित्योपयोगी प्रश्नोत्तरे.**

वर्गामध्ये सर्वसाधारणपणे ह्यांचा वापर व्हावा. असेच सोपे इतरही प्रश्न व त्यांची उत्तरे शिक्षकांनी अभ्यासवून घ्यावी. वर्गात संवाद सदैव व्हावा व तो शक्य तो सोप्या संस्कृतातून व्हावा ही अपेक्षा.

| प्रश्नः | उत्तरम् |
| --- | --- |
| १) श्रीमन्/श्रीमति, आगच्छामि किम्? | प्रविश/मा प्रविश। |
| २) श्रीमन्/श्रीमति, गच्छामि किम्? | गच्छ/मा गच्छ। |
| ३) किं तव नाम? | मम नाम........... इति। |
| ४) किं तव पितुः नाम? | मम पितुः नाम ........... इति। |
| ५) किं तव कुलनाम? | मम कुलनाम ........... इति। |
| ६) आसने उपविशामि किम्? | बाढम्, आसने उपविश। |
| ७) किं तव वयः? | मम वयः........... वर्षमितम्। |
| ८) किं तव पितुः व्यवसायः/उद्यमः? | मम पिता ...........। |
| ९) का वेला वर्तते? | ...........वादनवेला जाता। |
| १०) कस्मिन् वर्गे/वर्षे/पठसि? | ...........वर्षे/वर्गे पठामि। |

११) कान् विषयान् पठसि? ..........इति विषयान् पठामि।
के तव विषयाः? ..........इति मम विषयाः।
१२) के तव प्रियाः खेलाः? ..........इति मे प्रियाः खेलाः।
कान् खेलान् खेलसि? ..........खेलान् खेलामि।
१३)श्रीमन्/श्रीमति, अहम् आपृच्छे किम्? तथा/बाढम्।
१४)कुत्र वससि? ..........वसामि।
कः तव वासग्रामः? ..........मम वासग्रामः।
१५)के तव प्राध्यापकाः? ..........महाशयाः मम प्राध्यापकाः।
१६)के तव प्राचार्याः? ..........महाशयाः मम प्राचार्याः।
१७)किं तव महाविद्यालयस्य नाम? ..........इति मम महाविद्यालयस्य नाम।
१८)कदा तव त्रैमासिकी/षाण्मासिकी/वार्षिकी परीक्षा? मम..........परीक्षा.......मासे वर्तते।
१९)कां परीक्षाम् उत्तीर्णः असि? ..........शालान्त परीक्षाम् उत्तीर्णः।
२०)कस्मिन् विषये प्रावीण्यं प्राप्तम्? संस्कृतविषये/..........प्रावीण्यं प्राप्तम्।
२१)भो नमस्ते? ..........नमस्ते।
२२)कुत्र गच्छसि? विद्यालयं/मन्दिरं गच्छामि।
२३)कुत्र गमनम्? विद्यालयम्/मन्दिरं प्रति गमनम्।
२४)कुतः आगतः? विद्यालयतः/मन्दिरतः आगतः।
२५)अपि कुशलं तव? अनुगृहीतोऽस्मि। कुशलं मम।

×××

